श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्री मुक्कूर् लक्ष्मीनृसिंहदासेन कृतम्

# ॥ श्रीमट्टपल्लि मङ्गळाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्रीमट्टपल्लि मङ्गळाष्टकम् ॥

मट्टपल्लिनिवासाय मधुरानन्दरूपिणे।
महायज्ञस्वरूपाय श्रीनृसिंहाय मङ्गळम्॥ १ ॥

कृष्णवेणीतटस्थाय सर्वाभीष्टप्रदायिने।
प्रह्लादप्रियरूपाय श्रीनृसिंहाय मङ्गळम्॥ २ ॥

गर्तस्थितायधीराय गम्भीराय महात्मने।
सर्वारिष्ट विनाशाय श्रीनृसिंहाय मङ्गळम्॥ ३ ॥

ऋग्यजुस्सामरूपाय मन्त्रारूढायधीमते।
श्रितानां कल्पवृक्षाय श्रीनृसिंहाय मङ्गळम्॥ ४ ॥

गुहाशयाय गुह्याय गुह्यविद्यास्वरूपिणे।
कुहरान्ते विहाराय श्रीनृसिंहाय मङ्गळम्॥ ५ ॥

श्रीपल्यद्रिमध्यस्थाय निधये मधुराय च।
सुखप्रदाय देवाय श्रीनृसिंहाय मङ्गळम्॥ ६ ॥

तापनीयरहस्याय तापत्रय विनाशिने।
नतानां पारिजाताय श्रीनृसिंहाय मङ्गळम्॥ ७ ॥

राज्यलक्ष्म्या समेताय रागद्वेष विनाशिने।
मट्टपल्लि निवासाय श्रीनृसिंहाय मङ्गळम्॥ ८ ॥

मुक्कूर् नृसिंहदासेन प्रोक्तं मङ्गळमद्भुतम्।
यः पठेत् श्रद्धया भक्त्या सर्वपापैः प्रमुच्यते॥ ९ ॥

॥ इति श्रीमट्टपल्लि मङ्गळाष्टकम् संपूर्णम् ॥